# काव्यादर्शे तृतीयः परिच्छेदः

अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः ।
यमकं तच्च पादानामादिमध्यान्तगोचरम् ॥ १ ॥
एकद्वित्रिचतुष्पादयमकानां विकल्पनाः ।
आदिमध्यान्तमध्यान्तमध्याद्याद्यन्तसर्वतः ॥ २ ॥
अत्यन्तबहवस्तेषां भेदाः संभेदयोनयः ।
सुकरा दुष्कराश्चैव दर्श्यन्ते तत्र केचन ॥ ३ ॥

मानेन मानेन सखि प्रणयोऽभूत् प्रिये जने ।
खण्डिता कण्ठमाश्लिष्य तमेव कुरु सत्रपम् ॥ ४ ॥
मेघनादेन हंसानां मदनो मदनोदिना ।
नुन्नमानं मनः स्त्रीणां सह रत्या विगाहते ॥ ५ ॥
राजन्वत्यः प्रजा जाता भवन्तं प्राप्य सम्प्रति ।
चतुरं चतुरम्भोधिरशनोर्वीकरग्रहे ॥ ६ ॥
अरण्यं कैश्चिदाक्रान्तमन्यैः सद्म दिवौकसाम् ।
पदातिरथनागाश्वरहितैरहितैस्तव ॥ ७ ॥

मधुरं मधुरम्भोजवदने वद नेत्रयोः ।
विभ्रमं भ्रमरभ्रान्त्या विडम्बयति किं नु ते ॥ ८ ॥
वारणो वा रणोद्दामो हयो वा स्मर दुर्धरः ।
न यतो नयतोऽन्तं नस्तदहो विक्रमस्तव ॥ ९ ॥
राजितैराजितैक्ष्ण्येन जीयते त्वादृशैर्नृपैः ।
नीयते च पुनस्तृप्तिं वसुधा वसुधारया ॥ १० ॥
करोति सहकारस्य कलिकोत्कलिकोत्तरम् ।
मन्मनो मन्मनोऽप्येष मत्तकोकिलनिस्वनः ॥ ११ ॥
कथं त्वदुपलम्भाशाविहताविह तादृशी ।
अवस्था नालमारोढुमङ्गनामङ्गनाशिनी ॥ १२ ॥
निगृह्य नेत्रे कर्षन्ति बालपल्लवशोभिना ।
तरुणा तरुणान् कृष्टानलिनो नलिनोन्मुखाः ॥ १३ ॥
विशदा विशदामत्तसारसे सारसे जले ।
कुरुते कुरुतेनेयं हंसी मामन्तकामिषम् ॥ १४ ॥

विषमं विषमन्वेति मदनं मदनन्दनः ।
सहेन्दुकलयापीडमलया मलयानिलः ॥ १५ ॥
मानिनी मा निनीषुस्ते निषङ्गत्वमनङ्ग मे ।
हारिणी हारिणी शर्म तनुतां तनुतां यतः ॥ १६ ॥
जयता त्वन्मुखेनास्मानकथं न कथं जितम् ।
कमलं कमलंकुर्वदलिमदलि मत्प्रिये ॥ १७ ॥
रमणी रमणीया मे पाटलापाटलांशुका ।
वारुणीवारुणीभूतसौरभा सौरभास्पदम् ॥ १८ ॥
इति पादादियमकमव्यपेतं विकल्पितम्
व्यपेतस्यापि वर्ण्यन्ते विकल्पास्तस्य केचन ॥ १९ ॥
मधुरेणदृशां मानं मधुरेण सुगन्धिना ।
सहकारोद्गमेनैव शब्दशेषं करिष्यति ॥ २० ॥
करोतिताम्रो रामाणां तन्त्रीताडनविभ्रमम् ।
करोति सेर्ष्यं कान्ते च श्रवणोत्पलताडनम् ॥ २१ ॥
सकलापोल्लसनया कलापिन्यातु नृत्यते ।
मेघाली नर्तिता वातैः सकलापो विमुञ्चति ॥ २० ॥
स्वयमेव गलन्मानकलि कामिनि ते मनः ।
कलिकामिह नीपस्य दृष्ट्वा कां न स्पृशेद्दशाम् ॥ २३ ॥
आरुह्याक्रीडशैलस्य चन्द्रकान्तस्थलीमिमाम् ।
नृत्यत्येष लसच्चारुचन्द्रकान्तः शिखावलः ॥ २४ ॥
उद्धृत्य राजकादुर्वी ध्रियतेऽद्य भुजेन ते ।
वराहेणोद्धृता यासौ वराहेरुपरि स्थिता ॥ २५ ॥
करेण ते रणेष्वन्तकरेण द्विषतां हताः ।
करेणवः क्षरद्रक्ता भान्ति संध्याघना इव ॥ २६ ॥
परागतरुराजीव वातैर्ध्वस्ता भटैश्चमूः ।
परागतमिव क्वापि परागततमम्बरम् ॥ २७ ॥
पातु वो भगवान् विष्णुः सदा नवघनद्युतिः ।
स दानवकुलध्वंसी सदानवरदन्तिहा ॥ २८ ॥
कमलेः समकेशं ते कमलेर्ष्याकरं मुखम् ॥
कमलेख्यं करोषि त्वं कमलेवोन्मदिष्णुषु ॥ २९ ॥

मुदा रमणमन्वीतमुदारमणिभूषणाः ।
मदभ्रमदृशः कर्तुमदभ्रजघनाः क्षमाः ॥ ३० ॥
उदितैरन्यपुष्टानामा रुतैर्मे हृतं मनः ।
उदितैरपि ते दूति मारुतैरपि दक्षिणैः ॥ ३१ ॥
सुराजितह्रियो यूनां तनुमध्यासते स्त्रियः ।
तनुमध्याः क्षरत्स्वेदसुराजितमुखेन्दवः ॥ ३२ ॥
इति व्यपेतयमकप्रभेदोऽप्येष दर्शित· ।
(३) अव्यपेतव्यपेतात्मा विकल्पोऽप्यस्ति तद्यथा ॥ ३३ ॥
सालं सालम्बकलिकासालं साल न वीक्षितुम् ।
नालीनालीनवकुलानाली नालीकिनीरपि ॥ ३४ ॥
कालं कालमनालक्ष्यतारतारकमीक्षितुम् ।
तारतारम्यरसितं कालं कालमहाघनम् ॥ ३५ ॥
याम यामत्रयाधीनायामया मरणं निशा ।
यामयाम धिया स्वर्त्या या मया मथितैव सा ॥ ३६
इति पादादियमकविकल्पस्येदृशी गतिः ।
एवमेव विकल्प्यानि यमकान्तराण्यपि ॥ ३७ ॥
न प्रपञ्चभयाद्भेदा· कार्त्स्न्येनाख्यातुमीहिताः ।
दुष्कराभिमता ये तु वर्ण्यन्ते तेत्र केचन ॥ ३८ ॥
स्थिरायते यतेन्द्रियो न हीयते यतेर्भवान् ।
अमायतेयतेप्यभूत् सुखाय तेयते क्षयम् ॥ ३९ ॥

सभासु राजन्नसुराहतैर्मुखै-
र्महीसुराणां वसुराजितैः स्तुताः ।
न भासुरा यान्ति सुरान् न ते गुणाः
प्रजासु रागात्मसु राशितां गता ॥ ४० ॥

तव प्रिया सच्चरिताप्रमत्त या
विभूषण धार्यमिहांशुमत्तया ।
रतोत्सवामोदविशेषमत्तया
फलं न मे किंचन कान्तिमत्तया ॥ ४१ ॥

भवादृशा नाथ न जानते नते
रस विरुद्धे खलु सन्नतेनते ।
य एव दीनाः शिरसा नतेन ते
चरन्त्यलं दैन्यरसेन तेन ते ॥ ४२ ॥

लीलास्मितेन शुचिना मृदुनोदितेन
व्यालोकितेन लघुना गुरुणा गतेन ।
व्याजृम्भितेन जघनेन च दर्शितेन
सा हन्ति तेन गलितं मम जीवितेन ॥ ४३ ॥

श्रीमानमानमरवर्त्मसमानमान-
मात्मानमानतजगत्प्रथमानमानम् ।
भूमानमानमत यः स्थितिमानमान-
नामानमानमतमप्रतिमानमानम् ॥ ४४ ॥

सारयन्तमुरसा रमयन्ती
सारभूतमुरुसारधरा तम् ।
सारवानुकृतसारसकाञ्ची
सा रसायनमसारमवैति ॥ ४५ ॥

नयानयालोचनयानयानया-
नयानयान्धान् विनयानयायत ।
नयानयासीज्जिनयानया नया
नयानयास्ताञ्जनयानयाश्रितान् ॥ ४६ ॥

रवेण भौमो ध्वजवर्तिवीरवे-
रवेजि संयत्यतुलास्त्रगौरवे ।
रवेरिवोग्रस्य पुरो हरे रवे-
रवेत तुल्यं रिपुमस्य भैरवे ॥ ४७ ॥

मया मयालम्ब्यकलामयामया-
मयामयातन्यविरामयामया ।
मयामयार्ति निशयामयामया-
मयामयामूं करुणामयामया ॥ ४८ ॥

मता धुनानारमतामकामता-
मतापलब्धाग्रिमतानुलोमता ।
मतावयत्युत्तमताविलोमता-
मताम्यतस्ते समता न वामता ॥ ४९ ॥

कालकालगलकालकालमुखकालकाल-
कालकालपनकालकालघनकालकाल- ।
कालकालसितकालका ललनिकालकाल-
कालकालगतु कालकाल कलिकालकाल ॥ ५० ॥

संदष्टयमकस्थानमन्तादी पादयोर्द्वयोः ।
उक्तान्तर्गतमप्येतत् स्वातन्त्र्येणात्र कीर्त्यते ॥ ५१ ॥

उपोढरागाप्यबला मदेन सा
मदेनसा मन्युरसेन योजिता ।
न योजितात्मानमनङ्गतापिता-
ङ्गतापि तापाय ममास नेयते ॥ ५२ ॥

अर्धाभ्यासः समुद्गः स्यादस्य भेदास्त्रयो मताः ।
पादाभ्यासोऽप्यनेकात्मा व्यज्यते स निदर्शनैः ॥ ५३ ॥

ना स्थेयःसत्त्वया वर्ज्यः परमायतमानया ।
नास्थेयः स त्वयावर्ज्यः परमायतमानया ॥ ५४ ॥

नरा जिता माननयासमेत्य
न राजिता माननया समेत्य ।
विनाशिता वैभवतापनेन
विनाशिता वै भवतापनेन ॥ ५५ ॥

कलापिनां चारुतयोपयान्ति
वृन्दानि लापोढघनागमानाम् ।
वृन्दानिलापोढघनागमानां
कलापिनां चारुतयोपयान्ति ॥ ५६ ॥

नमन्दयावर्जितमानसात्मया
न मन्दयावर्जितमानसात्मया ।
उरस्युपास्तीर्णपयोधरद्वयं
मया समालिङ्ग्यत जीवितेश्वरः ॥ ५७ ॥

सभा सुराणामबला विभूषिता
गुणैस्तवारोहि मृणालनिर्मलैः ।
स भासुराणामचला विभूषिता
विहारयन्निर्विश संपदः पुराम् ॥ ५८ ॥

कलं कमुक्तं तनुमध्यनामिका
स्तनद्वयी च त्वदृते न हन्त्यतः ।
न याति भूतं गणने भवन्मुखे
कलङ्कमुक्तं तनुमध्यनामिका ॥ ५९ ॥

यशश्च ते दिक्षु रजश्च सैनिका
वितन्वतेजोपम दंशिता युधा ।
वितन्वतेजोपमदं शितायुधा
द्विषां च कुर्वन्ति कुलं तरस्विनः ॥ ६० ॥

विभर्ति भूमेर्वलयं भुजेन ते
भुजंगमोमा स्मरतो मदाञ्चितम् ।
शृणुत्तमेकः स्वमवेत्य भूधरं
भुजं गमो मा स्म रतो मदं चितम ॥ ६१ ॥

स्मरानलो मानविवर्धितो यः
स निर्वृतिं ते किमपाकरोति ।
समन्ततस्तामरसेक्षणे न
समं ततस्तामरसे क्षणेन ॥ ६२ ॥

प्रभावतोनाम न वासवस्य
प्रभावतो नामन वा सवस्य ।
प्रभावतो नाम नवासवस्य
विच्छित्तिरासीत् त्वयि विष्टपस्य ॥ ६३ ॥

परंपराया बलवारणानां
परं पराया बलवारणानाम् ।
धूलीः स्थलीर्व्योम्नि विधाय रुन्धन्
परं पराया बलवा रणानाम् ॥ ६४ ॥

न श्रद्दधे वाचमलज्ज मिथ्या-
भवद्विधानामसमाहितानाम् ।
भवद्विधानामसमाहितानां
भवद्विधानामसमाहितानाम् ॥ ६५ ॥

सन्नाहितोमानमराजसेन
सन्नाहितोमानम राजसेन ।
सन्ना हितोमानमराजसेन
सन्नाहितो मानम राजसे न ॥ ६६ ॥

सकृद्द्विस्त्रिश्च योऽभ्यासः पादस्यैवं प्रदर्शितः ।
श्लोकद्वयं तु युक्तार्थं श्लोकाभ्यासः स्मृतो यथा ॥ ६७ ॥

विनायकेन भवता वृत्तोपचितबाहुना ।
स्वमित्रोद्धारिणाभीता पृथ्वी यमतुलाश्रिता ॥ ६८ ॥

विनायकेन भवता वृत्तोपचितबाहुना ।
स्वमित्रोद्धारिणाभीता पृथ्वीयमतुलाश्रिता ॥ ६९ ॥

एकाकारचतुष्पादं तन्महायमकाह्वयम् ।
तत्रापि दृश्यतेऽभ्यासः सा परा यमकक्रिया ॥ ७० ॥

समानयासमानया समानयासमानया ।
स मा न यासमानया समानयासमानया ॥ ७१ ॥

धराधराकारधरा धराभुजां
भुजा मही पातुमहीनविक्रमाः ।
क्रमात् सहन्ते सहसा हतारयो
रयोद्धुरा मानधुरावलम्बिनः ॥ ७२ ॥

आवृत्तिः प्रातिलोम्येन पादार्धश्लोकगोचरा ।
यमकं प्रतिलोमत्वात् प्रतिलोममिति स्मृतम् ॥ ७३ ॥
यामताश कृतायासा सा याता कृशता मया ।
रमणारकृता तेस्तु स्तुतेताकरणामर ॥ ७४ ॥
नादिनोमदना धीः स्वा न मे काचन कामिता ।
तामिका न च कामेन स्वाधीना दमनोदिना ॥ ७५ ॥
यानमानयमाराविकशोनानजनाशना ।
यामुदारशताधीनामायामायमनादिसा ॥ ७६ ॥
सा दिनामयमायामा नाधीता शरदामुया ।
नाशनाजनना शोकविरामाय न मानया ॥ ७७ ॥
वर्णानामेकरूपत्वं यत् त्वेकान्तरमर्धयोः ।
गोमूत्रिकेति तत् प्राहुर्दुष्करं तद्विदो यथा ॥ ७८ ॥
मदनो मदिराक्षीणामपाङ्गास्त्रो जयेदयम् ।
मदेनो यदि तत् क्षीणमनङ्गायाञ्जलिं ददे ॥ ७९ ॥
प्राहुरर्धभ्रमं नाम श्लोकार्धभ्रमणं यदि ।
तदिष्टं सर्वतोभद्रं भ्रमणं यदि सर्वतः ॥ ८० ॥

मानोभव तवानीकं
नोदयाय न मानिनी ।
भयादमेयामा मा वा
वयमेनोमया नत ॥ ८१ ॥

सामायामा माया मासा मारानायायाना रामा ।
यानावारारावानाया मायारामा मारायामा ॥ ८२ ॥
यः स्वरस्थानवर्णानां नियमो दुष्करेष्वसौ ।
इष्टश्चतु:प्रभृत्येष दर्श्यते सुकरः परः ॥ ८३ ॥
आम्नायानामाहान्त्या वाग्गीतीरीतीः प्रीतीर्भीतीः ।
भोगो रोगो मोदो मोहो ध्येये वेच्छेद्देशे क्षेमे ॥ ८४ ॥

क्षितिविजितिस्थितिविहितिव्रतरतयः परगतयः ।
उरु रुरुधुर्गुरु दुधुवुर्युधि कुरवः स्वमरिकुलम् ॥ ८५ ॥
श्रीदीप्ती ह्रीकीर्ती धीनीती गीःप्रीती ।
एधेते द्वे द्वे ते ये नेमे देवेशे ॥ ८६ ॥
सामायामामाया मासा मारानायायाना रामा ।
यानावारारावानाया मायारामा मारायामा ॥ ८७ ॥
नयनानन्दजनने नक्षत्रगणशालिनि ।
अघने गगने दृष्टिरङ्गने दीयतां सकृत् ॥ ८८ ॥
अलिनीलालकलतं कं न हन्ति घनस्तनि ।
आननं नलिनच्छायनयनं शशिकान्ति ते ॥ ८९ ॥
अनङ्गलङ्घनालग्ननानातङ्का सदङ्गना ।
सदानघ सदानन्दनताङ्गासङ्गसङ्गतः ॥ ९० ॥
अगा गां गाङ्गकाकाकगाहकाघककाकहा ।
अहाहाङ्ग खगाङ्कागकङ्कागखगकाकक ॥ ९१ ॥
रे रे रोरुरुरोरुगागोगोगाङ्गगोगगुः ।
किं केकाकाकुकः काको मा मामामाममामम ॥ ९२ ॥
देवानां नन्दनो देवो नोदनो वेदनिन्दिनः ।
दिवं दुदाव नादेन दाने दानवनन्दिनः ॥ ९३ ॥
सूरिः सुरासुरासारिसारः सारससारसाः ।
ससार सरसीः सीरी ससूरूः स सुरारसी ॥ ९४ ॥
नूनं नुन्नानि नानेन नाननेनाननानि नः ।
नानेना ननु नानूनेनैनेनानानिनो निनीः ॥ ९५ ॥
इति दुष्करमार्गेऽपि कश्चिदादर्शितः क्रमः ।
प्रहेलिकाप्रकाराणां पुनरुद्दिश्यते गतिः ॥ ९६ ॥
क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे ।
परव्यामोहने चापि सोपयोगाः प्रहेलिकाः ॥ ९७ ॥
आहुः समागतां नाम गूढार्थां पदसंधिना ।
वञ्चितान्यत्र रूढेन यत्र शब्देन वञ्चना ॥ ९८ ॥
व्युत्क्रान्तातिव्यवहितप्रयोगान्मोहकारिणी ।
सा स्यात्प्रमुषिता यस्यां दुर्बोधार्था पदावली ॥ ९९ ॥
समानरूपा गौणार्थारोपितैर्ग्रथिता पदैः ।
परुषा लक्षणास्तित्वमात्रव्युत्पादितश्रुतिः ॥ १०० ॥

संख्याता नाम संख्यानं यत्र व्यामोहकारणम् ।
अन्यथा भासते यत्र वाक्यार्थः सा प्रकल्पिता ॥ १०१ ॥
सा नामान्तरिता यस्यां नाम्नि नानार्थकल्पना ।
निभृता निभृतान्यार्था तुल्यधर्मस्पृशा गिरा ॥ १०२ ॥
समानशब्दोपन्यस्तशब्दपर्यायसाधिता ।
संमूढा नाम या साक्षान्निर्दिष्टार्थापि मूढये ॥ १०३ ॥
योगमालात्मिका नाम या स्यात् सा परिहारिका ।
एकच्छन्नाश्रितं व्यक्तं यस्यामाश्रयगोपनम् ॥ १०४ ॥
सा भवेदुभयच्छन्ना यस्यामुभयगोपनम् ।
संकीर्णा नाम सा यस्यां नानालक्षणसंकरः ॥ १०५ ॥
एताः षोडश निर्दिष्टाः पूर्वाचार्यैः प्रहेलिकाः ।
दुष्टप्रहेलिकाश्चान्यास्तैरधीताश्चतुर्दश ॥ १०६ ॥
दोषानपरिसंख्येयान् मन्यमाना वयं पुनः ।
साध्वीरेवाभिधास्यामस्ता दुष्टा यास्त्वलक्षणाः ॥ १०७ ॥
न मया गोरसाभिज्ञं चेतः कस्मात् प्रकुप्यसि ।
अस्थानरुदितैरेभिरलमालोहितेक्षणे ॥ १०८ ॥
कुब्जामासेवमानस्य यथा ते वर्धते रतिः ।
नैवं निर्विशतो नारीरमरस्त्रीविडम्बिनीः ॥ १०९ ॥
दण्डे चुम्बति पद्मिन्या हंसः कर्कशकण्टके ।
मुखं वल्गुरवं कुर्वंस्तुण्डेनाङ्गानि घट्टयन् ॥ ११० ॥
खातयः कनि काले ते स्फातयः स्फारवल्गवः ।
चन्द्रे साक्षाद्भवन्त्यत्र वायवो मम धारिणः ॥ १११ ॥
अत्रोद्याने मया दृष्टा वल्लरी पञ्चपल्लवा ।
पल्लवे पल्लवे ताम्रा यस्यां कुसुममञ्जरी ॥ ११२ ॥
सुराः सुरालये स्वैरं भ्रमन्ति दशनार्चिषा ।
मज्जन्त इव मत्तास्ते सौरे सरसि संप्रति ॥ ११३ ॥
नासिक्यमध्या परितश्चतुर्वर्णविभूषिता ।
अस्ति काचित् पुरी यस्यामष्टवर्णाह्वया नृपाः ॥ ११४ ॥
गिरा स्खलन्त्या नम्रेण शिरसा दीनया दृशा ।
तिष्ठन्तमपि सोत्कम्पं वृद्धे मां नानुकम्पसे ॥ ११५ ॥
आदौ राजेत्यधीराक्षि पार्थिवः कोऽपि गीयते ।
सनातनश्च नैवासौ राजा नापि सनातनः ॥ ११६ ॥

हृतद्रव्यं नरं त्यक्त्वा धनवन्तं व्रजन्ति काः।
नानाभङ्गिसमाकृष्टलोका वेश्या न दुर्धराः ॥ ११७ ॥
जितप्रकृष्टकेशाख्यो यस्तवाभूमिसाह्वयः।
स मामद्य प्रभूतोत्कं करोति कलभाषिणि ॥ ११८ ॥
शयनीये परावृत्य शयितौ कामिनौ क्रुधा।
तथैव शयितौ रागात् स्वैरं मुखमचुम्बताम् ॥ ११९ ॥
विजितात्मभवद्वेषिगुरुपादहतो जनः।
हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति ॥ १२० ॥
न स्पृशत्यायुधं जातु न स्त्रीणां स्तनमण्डलम्।
अमनुष्यस्य कस्यापि हस्तोऽयं न किलाफलः ॥ १२१ ॥
केन कः सह संभूय सर्वकार्येषु संनिधिम्।
लब्ध्वा भोजनकाले तु यदि दृष्टो निरस्यते ॥ १२२ ॥
सहया सगजा सेना सभटेयं न चेज्जिता।
अमात्रिकोऽयं मूढः स्यादक्षरज्ञश्च नः सुतः ॥ १२३ ॥
सा नामान्तरितामिश्रा वञ्चितारूपयोगिनी।
एवमेवेतरासामप्युन्नेयः संकरक्रमः ॥ १२४ ॥
[ * इति प्रहेलिकामार्गो दुष्करात्मापि दर्शितः।
विद्वत्प्रयोगतो ज्ञेया मार्गाः प्रश्नोत्तरादयः ॥ ]

॥ इति प्रहेलिकाचक्रम् ॥

[ * विशदबुद्धिरनेन सुवर्त्मना
सुकरदुष्करमार्गमवैति हि।
न हि तदन्यनयेऽपि कृतश्रमः
प्रभुरिमं नयमेतुमिदं विना ॥ ]

इति शब्दालंकाराः ॥

[ * काव्ये दोषा गुणाश्चैव विज्ञातव्या विचक्षणैः।
दोषा विपत्तये तत्र गुणाः संपत्तये यथा ॥
अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम्।
शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसंधिकम् ॥ १२५ ॥

* एते श्लोकाः क्वचनाधिकाः पठ्यन्ते, तथा तृतीय परिच्छेद शब्दालंकारैं परिसमाप्य दोषविवेचनात्मको ग्रन्थांशः चतुर्थपरिच्छेदत्वेनोल्लिख्यते।

देशकालकलालोकन्यायागमविरोधि च ।
इति दोषा दशैवैते वर्ज्याः काव्येषु सूरिभिः ॥ १२६ ॥
प्रतिज्ञाहेतुदृष्टान्तहानिर्दोषो न वेत्यसौ ।
विचारः कर्कशः प्रायस्तेनालीढेन किं फलम् ॥ १२७ ॥
समुदायार्थशून्यं यत् तदपार्थमितीष्यते ।
उन्मत्तमत्तबालानामुक्तेरन्यत्र दुष्यति ॥ १२८ ॥
समुद्रः पीयते देवैरहमस्मि जरातुरः ।
अमी गर्जन्ति जीमूता हरेरैरावणः प्रियः ॥ १२९ ॥
इदमस्वस्थचित्तानामभिधानमनिन्दितम् ।
इतरत्र कविः को वा प्रयुञ्जीतैवमादिकम् ॥ १३० ॥
एकवाक्ये प्रबन्धे वा पुर्वापरपराहतम् ।
विरुद्धार्थतया व्यर्थमिति दोषेषु पठ्यते ॥ १३१ ॥
जहि शत्रुबलं कृत्स्नं जय विश्वंभरामिमाम् ।
न च ते कोऽपि विद्वेष्टा सर्वभूतानुकम्पिनः ॥ १३२ ॥
अस्ति काचिदवस्था सा साभिषङ्गस्य चेतसः ।
यस्यां भवेदभिमता विरुद्धार्थापि भारती ॥ १३३ ॥
परदाराभिलाषो मे कथमार्यस्य युज्यते ।
पिबामि तरलं तस्याः कदा नु दशनच्छदम् ॥ १३४ ॥
अविशेषेण पूर्वोक्तं यदि भूयोऽपि कीर्त्यते ।
अर्थतः शब्दतो वापि तदेकार्थं मतं यथा । १३५ ॥
उत्कामुन्मनयन्त्येते बालां तदलकत्विषः ।
अम्भोधरास्तडित्वन्तो गम्भीराः स्तनयित्नवः ॥ १३६ ॥
अनुकम्पाद्यतिशयो यदि कश्चिद्विवक्ष्यते ।
न दोषः पुनरुक्तोऽपि प्रत्युतेयमलंक्रिया ॥ १३७ ॥
हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा ।
हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी ॥ १३८ ॥
निर्णयार्थं प्रयुक्तानि संशयं जनयन्ति चेत् ।
वचांसि दोष एवासौ ससंशय इति स्मृतः ॥ १३९ ॥
मनोरथप्रियालोकरसलोलेक्षणे सखि ।
आराद्वृत्तिरसौ माता न क्षमा द्रष्टुमीदृशम् ॥ १४० ॥
ईदृशं संशयायैव यदि जातु प्रयुज्यते ।
स्यादलंकार एवासौ न दोषस्तत्र तद्यथा ॥ १४१ ॥

पश्याम्यनङ्गजातङ्कलङ्घितां तामनिन्दिताम् ।
कालेनैव कठोरेण ग्रस्तां किं नस्त्वदाशया ॥ १४२ ॥
कामार्तो धर्मतप्ता वेत्यनिश्चयकरं वचः ।
युवानमाकुलीकर्तुमिति दूत्याह नर्मणा ॥ १४३ ॥
उद्देशानुगुणोऽर्थानामनूद्देशो न चेत् कृतः ।
अपक्रमाभिधानं तं दोषमाचक्षते बुधाः ॥ १४४ ॥
स्थितिनिर्माणसंहारहेतवो जगतामभी ।
शंभुनारायणाम्भोजयोनयः पालयन्तु वः ॥ १४५ ॥
यत्नः संबन्धविज्ञानहेतुकोऽपि कृतो यदि ।
क्रमलङ्घनमप्याहुः सूरयो नैव दूषणम् ॥ १४६ ॥
बन्धुत्यागस्तनुत्यागो देशत्याग इति त्रिषु ।
आद्यन्तावायतक्लेशौ मध्यमः क्षणिकज्वरः ॥ १४७ ॥
शब्दहीनमनालक्ष्यलक्ष्यलक्षणपद्धतिः ।
पदप्रयोगोऽशिष्टेष्टः शिष्टेष्टस्तु न दुष्यति ॥ १४८ ॥
अवते भवते बाहुर्महीमर्णवशक्वरीम् ।
महाराजन्नजिज्ञासा नास्तीत्यासां गिरां रसः ॥ १४९ ॥
दक्षिणाद्रेरुपसरन् मारुतश्चूतपादपान् ।
कुरुते ललिताधूतप्रवालाङ्कुरशोभिनः ॥ १५० ॥
इत्यादि शास्त्रमाहात्म्यदर्शनालसचेतसाम् ।
अपभाषणवद्भाति न च सौभाग्यमुज्झति ॥ १५१ ॥
श्लोकेषु नियतस्थानं पदच्छेदं यतिं विदुः ।
तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं यथा ॥ १५२ ॥
स्त्रीणां सङ्गीतविधिमयमादित्यवंश्यो नरेन्द्रः
पश्यत्यक्लिष्टरसमिह शिष्टैरमात्यादि दुष्टम् ।
कार्याकार्याण्ययमविकलान्यागमेनैव पश्यन्
वश्यामुर्वीं वहति नृप इत्यस्ति चैव प्रयोगः ॥ १५३ ॥
लुप्ते पदान्ते शिष्टस्य पदत्वं निश्चितं यथा ।
तथा सन्धिविकारान्तं पदमेवेति वर्ण्यते ॥ १५४ ॥
तथापि कटु कर्णानां कवयो न प्रयुञ्जते ।
ध्वजिनी तस्य राज्ञः केतूदस्तजलदेत्यदः ॥ १५५ ॥
वर्णानां न्यूनताधिक्ये गुरुलघ्वयथास्थितिः ।
तत्र तद्भिन्नवृत्तं स्यादेष दोषः सुनिन्दितः ॥ १५६ ॥

इन्दुपादाः शिशिराः स्पृशन्तीत्यूनवर्णता ।
सहकारस्य किसलयान्यार्द्राणीत्यधिकाक्षरम् ॥ १५७ ॥

कामेन बाणा निशाता विमुक्ता
मृगेक्षणास्वित्यथागुरुत्वम् ।
मदनस्य बाणा निशिताः पतन्ति
वामेक्षणास्वित्ययथालघुत्वम् ॥ १५८ ॥

न संहितां विवक्षामीत्यसंधानं पदेषु यत् ।
तद्विसंधीति निर्दिष्टं न प्रगृह्यादिहेतुकम् ॥ १५९ ॥
मन्दानिलेन चलता अङ्गनागण्डमण्डले ।
लुप्तमुद्भेदि धर्माम्भो नभस्यस्मद्वपुष्यपि ॥ १६० ॥
[ * आधिव्याधिपरीताय अद्य श्वो वा विनाशिने ।
को हि नाम शरीराय धर्मापेतं समाचरेत् ॥ ]
मानेर्ष्ये इह शीर्येते स्त्रीणां हिमऋतौ प्रिये ।
आसु रात्रिष्विति प्राज्ञैराम्नातं व्यस्तमीदृशम् ॥ १६१ ॥
देशोऽद्रिवनराष्ट्रादिः कालो रात्रिंदिवर्तवः ।
नृत्यगीतप्रभृतयः कलाः कामार्थसंश्रयाः ॥ १६२ ॥
चराचराणां भूतानां प्रवृत्तिर्लोकसंज्ञिता ।
हेतुविद्यात्मको न्यायः सस्मृतिः श्रुतिरागमः ॥ १६३ ॥
तेषु तेष्वयथारूढं यदि किंचित् प्रवर्तते ।
कवेः प्रमादाद्देशादिविरोधीत्येतदुच्यते ॥ १६४ ॥
कर्पूरपादपामर्शसुरभिर्मलयानिलः ।
कलिङ्गवनसंभूता मृगप्राया मतङ्गजाः ॥ १६५ ॥
चोलाः कालागुरुश्यामकावेरीतीरभूमयः ।
इति देशविरोधिन्या वाचः प्रस्थानमीदृशम् ॥ १६६ ॥
पद्मिनी नक्तमुन्निद्रा स्फुटत्यह्नि कुमुद्वती ।
मधुरुत्फुल्लनिचुलो निदाघो मेघदुर्दिनः ॥ १६७ ॥
श्रव्यहंसगिरो वर्षाः शरदो मत्तबर्हिणः ।
हेमन्तो निर्मलादित्यः शिशिरः श्लाघ्यचन्दनः ॥ १६८ ॥
इति कालविरोधस्य दर्शिता गतिरीदृशी ।
मार्गः कलाविरोधस्य मनागुद्दिश्यते यथा ॥ १६९ ॥

---

* अयमधिकः श्लोकः क्वचन पठ्यते ।

वीरशृङ्गारयोर्भावौ स्थायिनौ क्रोधविस्मयौ ।
पूर्णसप्तस्वरः सोऽयं भिन्नमार्गः प्रवर्तते ॥ १७० ॥
इत्थं कलाचतुःषष्टिविरोधः साधु नीयताम् ।
तस्याः कलापरिच्छेदे रूपमाविर्भविष्यति ॥ १७१ ॥
आधूतकेसरो हस्ती तीक्ष्णशृङ्गस्तुरंगमः ।
गुरुसारोऽयमेरण्डो निःसारः खदिरद्रुमः ॥ १७२ ॥
इति लौकिक एवायं विरोधः सर्वगर्हितः ।
विरोधो हेतुविद्यासु न्यायाख्यासु निदर्श्यते ॥ १७३ ॥
सत्यमेवाह सुगतः संस्कारानविनश्वरान् ।
तथाहि सा चकोराक्षी स्थितैवाद्यापि मे हृदि ॥ १७४ ॥
कापिलैरसदुद्भूतिः स्थान एवोपवर्ण्यते ।
असतामेव दृश्यन्ते यस्मादस्माभिरुद्भवाः ॥ १७५ ॥
गतिर्न्यायविरोधस्य सैषा सर्वत्र दृश्यते ।
अथागमविरोधस्य प्रस्थानमुपदिश्यते ॥ १७६ ॥
अनाहिताग्नयोऽप्येते जातपुत्रा वितन्वते ।
विप्रा वैश्वानरीमिष्टिमक्लिष्टाचारभूषणाः ॥ १७७ ॥
असावनुपनीतोऽपि वेदानधिजगे गुरोः ।
स्वभावशुद्धः स्फटिको न संस्कारमपेक्षते ॥ १७८ ॥
विरोधः सकलोऽप्येष कदाचित् कविकौशलात् ।
उत्क्रम्य दोषगणनां गुणवीथीं विगाहते ॥ १७९ ॥
तस्य राज्ञः प्रभावेन तदुद्यानानि जज्ञिरे ।
आर्द्रांशुकप्रवालानामास्पदं सुरशाखिनाम् ॥ १८० ॥
राज्ञां विनाशपिशुनश्चचार खरमारुतः ।
धुन्वन् कदम्बरजसा सह सप्तच्छदोद्गमान् ॥ १८१ ॥
दोलाभिप्रेरणत्रस्तवधूजनमुखोद्गतम् ।
कामिनां लयवैषम्यं गेयं रागमवर्धयत् ॥ १८२ ॥
ऐन्दवादर्चिषः कामी शिशिरं हव्यवाहनम् ।
अबलाविरहक्लेशविह्वलो गणयत्ययम् ॥ १८३ ॥
प्रमेयोऽप्यप्रमेयोऽसि सफलोऽप्यसि निष्फलः ।
एकस्त्वमप्यनेकोऽसि नमस्ते विश्वमूर्तये ॥ १८४ ॥
पञ्चानां पाण्डुपुत्राणां पत्नी पाञ्चालपुत्रिका ।
सतीनामग्रणीश्चासीद्दैवो हि विधिरीदृशः ॥ १८५ ॥

शब्दार्थालंक्रियाश्चित्रमार्गाः सुकरदुष्कराः ।
गुणा दोषाश्च काव्यानामिह संक्षिप्य दर्शिताः ॥ १८६ ॥
व्युत्पन्नबुद्धिरमुना विधिदर्शितेन
मार्गेण दोषगुणयोर्वशवर्तिनीभिः ।
वाग्भिः कृताभिसरणो मदिरेक्षणाभि-
र्धन्यो युवेव रमते लभते च कीर्तिम् ॥ १८७ ॥

॥ इत्याचार्यदण्डिनः कृतौ काव्यादर्शे शब्दालंकार-दोष-
विभागो नाम तृतीयः परिच्छेदः ॥

॥ समाप्तश्चायं ग्रन्थः ॥

६५८५

THE

# KAVYĀDARŚA OF DAṆḌIN

## LITERAL ENGLISH TRANSLATION.

*N.B.*—In the translation extra words are enclosed within square brackets; explanations and references are inserted in ordinary (curved) brackets; while in the case of paronomastic words the secondary sense is inserted in angular brackets directly after the primary sense. In Parichchheda iii in particular, various kinds of underlinings introduced are intended to explain the precise nature of the word embellishments illustrated, for which purpose the original Sanskrit stanza had to be transcribed entire in Roman characters and then its translation inserted within brackets.

# THE KĀVYĀDARŚA OF DANDIN

## PARICHCHHEDA I

May the all-white Sarasvatī—the Hansī midst the group of the mouth lotuses of the four faced [God]—find for long delight in my manasa (mind) 1

We have condensed earlier treatises have studied [literary] usages, and, to the best of our ability, are [now] commencing a treatment of Poetry 2

All the dealings of men in this world are in every way rendered possible by virtue of languages alone, be they amongst those formulated in rules by the Sages or be they otherwise 3

This entire triad of worlds would have become blind-darkness if the light named Word had not been shining all through the Samsāra 4

The reflecting object [in the form] of the glory of the kings of yore imaged within the mirror [in the form] of literature—though the kings be themselves absent—itself does not, mark ye perish 5

Word well used is declared by the wise to be the wish milking cow, the same ill used, however, declares the user s bovine nature 6

Hence not even a slight blemish should by any means be overlooked in poetry A body, albeit beautiful, can become loathsome [even] by one spot of leprosy 7

How can a man ignorant of the Science distinguish between excellences and blemishes? Has [ever] a blind man the power to comprehend distinctions in colours? 8

Hence it is that the Sages, with a view to secure people s proficiency in letters, have laid down, in the case of compositions of diverse styles the methods for their making 9

They have shown what constitutes the body and what the embellishments of Poetry The 'body' consists of a series of words calculated to aptly convey a desired meaning 10

This [body] is adequately divided into just three sorts Metrical, Prose, and Mixed The 'metrical' consists of four feet, and this [again] falls into two classes Vritta and Jāti 11

The detailed treatment of it (the metrical body) is set forth in Metrical Compendium, and the knowledge of it is [as] a ship for persons wishing to dive into the deep ocean of Poetry 12

There exists that detailed classification of Poetry into Muktaka, Kulaka, Kosa and Samghāta, but it is not mentioned here, as it is included within Sarga bandha (or Composition in Cantos) 13

Composition in Cantos is a long poem (Mahākāvya) and its definition is being given [now] Its opening is a benediction, a salutation, or a naming of the principal theme 14

It springs from a historical incident or is otherwise based upon some fact, it turns upon the fruition of the fourfold ends and its hero is clever and noble 15

By descriptions of cities, oceans mountains, seasons and risings of the moon or the sun, through sportings in garden or water, and festivities of drinking and love, 16

Through sentiments-of-love in separation and through marriages, by descriptions of the birth and rise of Princes, and likewise through state counsel, embassy, advance, battle, and the hero's triumph 17

Embellished, not too condensed, and pervaded all through with poetic sentiments and emotions, with cantos none too lengthy and having agreeable metres and well formed joints, 18

And in each case with an ending in a different metre furnished,—such a poem possessing good figures of speech

wins the people's heart and endures longer than [even] a Kalpa. 19

A poem, although defective in certain of these aspects, is not to be condemned, provided the excellence in respect of things contained in it wins the approval of the experts. 20

Having first set forth the hero with [all] his excellences, through him to secure the defeat of his enemies: this is a mode natural-and-pleasing 21

While, having [first] delineated the family, the manliness, the learning, and so forth even of the enemy, to assert, through his triumph over him, the pre-eminence of the hero, is what is approved by us 22

A succession of words not amenable to division into metrical feet is called Prose Chronicle and Tale are its two varieties Of these Chronicle, we are told,— 23

Is what is narrated by the Hero himself exclusively: the other by the Hero as well as by any other person The showing forth of one's own merits is not here, in view of his being a recorder of events that have actually occurred, a blemish. 24

This restriction, however, is not observed, in as much as there [in Ākhyāyikā] also other persons can narrate. That another person narrates or he himself does it—what kind of a ground for distinction is this? 25

If [the metres] Vaktra and Aparavaktra and the having of the title Uchchhvāsa [for a sub-division] are to be the differentiating mark of an Ākhyāyikā, occasionally even in Kathās— 26

Why, as in the case of Āryā and other metres, should there not be scope for Vaktra and Aparavaktra? Lambha and other [titles for sub-divisions] are observed [in *Kathās*] *as a distinguishing characteristic*: let 'Uchchhvāsa be one of them: what matters? 27

Hence, Kathā and Ākhyāyikā constitute just one species denoted by two names. Herein also are comprised the remaining species of Narration. 28

The abduction of a maiden battle, deception, some body s rise in fortune and such other topics are common to it (Ākhyayika) no less than to Compositions in Cantos they do not form its differentiating characteristics 29

*Any peculiar mark that the poet might affect* according to his fancy [in a Katha, etc ] he could without impropriety affect in other compositions For accomplished persons, in the attainment of their desired ends, can there be any occasion that may not [just as well] serve as an opening ? 30

Mixed compositions are the drama, etc Details about these [should be followed] in *other works* There exists likewise a composition partly prose and partly verse known as Champu 31

All this literature, from another point of view, the authorities declare as being fourfold Sanskrit Prakrit, Apabhramsa and Mixed 32

The Sanskrit is indeed the speech divine, it has been expounded by great Sages Manifold is the gradation of the Prakrit as being Tadbhava (derived) Tatsama (analogous) and Desi (provincial) 33

The speech current in the Mahārāshtra is known as the best Prakrit, in it are composed [poems like] the Setubandha,—that ocean of the gems of good sayings 34

Saurasenī and Gaudī and Lāṭī, as also any other language of the same kind, is in common usage denoted by [the simple term] 'Prākrit 35

The languages of Ābhīras (cowherds) and others are known as Apabhramsa in poetic compositions in a scientific treatise however, every [language] other than Sanskrit is declared to be Apabhramśa (a debased form) 36

In Sanskrit are Sargabandha and similar compositions, in Prākrit are Skandhaka and the like Osara and others are in Apabhramsa, while the dramas etc use a mixed language 37

As to a Katha it is composed in all languages as also in Sanskrit The Brihatkatha is said to be in the language of ghosts, and contains miraculous incidents 38

Lasya (dancing), Chhalita (pantomime), Sampā (instrumental music) and such other [elements] are meant for the eye The rest on the contrary are exclusively for the ear Here also a twofold division has been made out 39

Manifold is the style of composition with minute mutual differences Of these [styles] the Vaidarbha and the Gaudiya as being clearly different [from each other], will now be described 40

Cohesion (I 43), Lucidity (I 45) Evenness (I 47) Sweetness (I 51), Tenderness (I 69) Explicitness of meaning (I 73), Pregnancy[-of-expression] (I 76) Floridity (I 80), Grace (I 85), and Transference (I 93), 41

These ten qualities are considered as the soul of the Vaidarbha style, the opposites of these are usually to be noticed in the Gauda style 42

Cohesive is what does not involve Looseness Loose is what consists mainly of faintly aspirated syllables, as for instance—'Maliti mala lolāli kalila (a garlnd of Mālati[-flowers] laden with longing bees)' 43

In view of alliteration this has been permitted by the Gaudas, by the Vaidarbhas, [however,] because it secures compactness of [syllabic] binding, [expressions] like 'Malati-dama langhitam bhramaraih (a wreath of Malati invaded by bees)' 44

Having Lucidity is that which conveys a sense that is well-known 'Indor indivara dyuti lakshma lakshmim tanoti (the spot on the Moon shining like a blue lotus augments her charm)' is [for instance] an expression conveying the sense without any effort 45

Because it exhibits command over grammar the Gaudas prefer even what is not very conventional, for instance, 'Anatyarjunābjanmasadrikshānko valakshagah (the white rayed [Moon] having a spot resembling a water-born [lotus] not-very-white i.e. blue)' 46

Even is what is not uneven† as regards syllabic-structures These structures are soft harsh, and temperate, springing from the grouping together of soft, harsh and mixed syllables 47

[An instance of soft structure is—] 'Kokilalapavachalo mām aiti Malayanilah (garrulous by reason of the cuckoo's notes the Malaya wind approaches me), [that of harsh structure is—]' Uchchhalachchhikarachchhachchhanirjharambhahkanokshitah (being surcharged with drops of very pure water from rillets with their spouting sprays)' 48

[An instance of temperate structure is—] 'Chandana pranayodgandhir mando Malayamarutah (the soft Malaya breeze with its spreading fragrance due to friendship with sandal trees)', [an instance of uneven structure is—] 'Spardhate ruddhamaddhairyo vararamānanānilaih (having upset my courage [the wind] vies with the breath from the mouths of excellent damsels)' 49

[The last is an instance of unevenness in one line; but the preceding four lines as a whole constitute a larger example of unevenness] *regardless of this* unevenness and with an eye to pompousness in diction and in figures, the poetic style of the Easterners has attained a large volume 50

Sweet is what has Sentiment, [for] in words no less than in things Sentiment exists [Sentiment] whereby the learned are delighted like unto the honey loving [bees] by honey 51

Within any given group of audibles (śruti) one experiences a similarity [in sound], a juxtaposition of words exhibiting that kind of similarity and securing [a specific kind of] alliteration gives rise to Sentiment 52

[For instance—] 'Esha rājā yadā lakshmīm prāptavan *brāhmanapriyaḥ* | *Tadā prabhṛti dharmasya* loke sminnut savo bhavat || (When this king to whom the brahmans are dear attained sovereignty, from that time on, in this world, there has been a jubilant day for Religion) 53

† I read *bandhashvavishamam* following the Jesalmir Ms

The Gaudas do not pay any regard to such [sound-similarity], for they love alliteration (Anuprasa), the Vaidarbhas usually prefer this even to alliteration 54

Anuprāsa is a repetition of syllables, in metrical feet as well as in words, provided there is a contiguity sufficient to awaken latent impressions from earlier cognitions 55

[An Anuprasa in metrical feet is illustrated in—] 'Chandre sarannisottamse kundastabaka vibhrame I Indranilanibham lakshma sandadhatyalinah sriyam II (Upon the moon, the crest adornment of the autumnal night and exhibiting the grace of a bunch of kunda-flowers, the spot that looks like sapphire wears the charm of a bee)' 56

[An Anuprasa in words is illustrated in—] 'Charu chandramasam bhiru bimbam pasyaitadambare I Manmano manmathakrantam nirdayam hantum udyatam II (Look, O timid one, at this beautiful lunar orb in the sky, uprisen to strike ruthlessly at my mind [already] invaded by Cupid)' 57

It is Anuprasa of this sort with the [similar] audibles not too much removed [from each other] that is approved, and not as in—' Ramamukhambhojasadrisas chandramah (the moon appears like the lotus in the form of the damsel's face)' 58

[Consider the case—] 'Smarah kharah khalah kantah kāyah kopascha nah kriśah I (Cruel is Cupid and the lover a villain, our body as well as anger has grown feeble)', [or] 'Chyuto mano'dhiko rāgo moho jato'savo gatah II (my pride is gone and my love is greater, I faint my life is leaving me) 59

[Compositions] like these lead to a roughness of syllabic-structure and to looseness, hence such an Anuprasa the Southerners do not cultivate, 60

The same repetition having for its object a group [of syllables] is known as Yamaka (Chime), that, however, is not so exclusively condusive to Sweetness and will hence be dealt with later (iii 1-77) 61

Granted that each and every figure imbues the sense with Sentiment; nevertheless it is the absence of coarseness that for the major part bears this brunt. 62

'O girl, how is it that while I long for thee thou dost not long for me?'—the nature of the sense here conveyed is coarse and tends rather † to lack-of-Sentiment. 63

'No doubt this low-born Cupid, O fair-eyed one, is ruthless unto me; but, happily, he is free from malice for you!'—here the sense, not being coarse, gives rise to the Sentiment 64

There does exist a coarseness even in word It [springs] from the utterance of what is not polite, as for instance, a word beginning with 'ya' in the description of the joys of love. 65

Through the expressive power of words when taken in conjunction, and further through the [secondary] sense conveyed by a sentence [as a whole], there results vulgarity causing an unpleasant cognition; as an instance [of the former]—'Yā bhavatah priyā (she who is dear unto you < she who is dear unto the man with sexual propensity >)'. 66

[An instance of the latter is—] 'Kharam prahritya visrāntah purusho viryavān (having struck [the demon] Khara < lusily > the heroic personage [Rāma] < *the* virile youth > is taking his rest)'. [Compositions] like these are not commended in both the Styles. 67

[Expressions] like 'bhaginī (sister)', 'bhagavatī (honoured lady)', etc are universally permitted Thus far [has been exhibited] the [two-fold] division of Sweetness; now Tenderness will be described. 68

Now Tender is thought to be that which for the most part has no harsh letters; while the fault of a looseness *in structure* has been [*already*, i. 43] exhibited in a composition with all soft [vocables] 69

[Consider for instance—] 'Mandalīkritya barhāni kanthair madhura-gītibhih | Kalāpinah pranrityanti kāle

† I read *vairasyāyeva*, following the *Jesalmir Ms*

jimutamālini || (Spreading their plumage in a circle these feathery-peacocks with their throats full of sweet songs are dancing in [ this ] season that gathers clouds)'. 70

Here the sense is by no means exalted, nor is there any striking figure It is only through Tenderness that this [ stanza ] gains a place upon the lips of the good people 71

Under the idea that it secures Grandeur others very often produce compositions although very difficult to pronounce, for example —' Nyakshena pakshaḥ kshapitaḥ kshatriyānām kshanāt (Parasurāma in an instant destroyed the troop of kshatriyas)' 72

Explicitness of meaning consists in the meaning requiring nothing [ extraneous ] to be brought over [ for completion ], for example—' Hari [ incarnated as Boar ] uplifted the earth from the ocean reddened by the blood of serpents' 73

' The earth was by the Great Boar uplifted from the reddened ocean —if so much alone had been expressed the ' blood of serpents ' would have to be [ extraneously ] brought over 74

Such a [ composition ] is not much esteemed in both the Styles, for, the sense is not easily understood if the law of [ the expressive power of ] words is transcended 75

When upon the recitation of a [ composition ] a certain eminent charm is experienced, that [ composition ] is styled ' Pregnant in expression ' This [ charm ] lends excellence to poetic style 76

[ For example— ] ' The forlorn look of the mendicants fell upon Your face [ but ] once and thereafter Your Majesty, it had not in that same condition to look upon another's face 77

In this statement of liberality the eminence is very-well perceived In this very manner, by the application of a similar standard, other instances should be followed out 78

Some consider [a composition] with becoming epithets as being Pregnant in meaning, for example, [a composition making use of epithets like] 'sportive lotus', 'pleasure pond', 'golden bracelet' etc 79

Floridity consists in a superabundance of compounds This is the soul of Prose Even in Poetry, for the non Southerners, this is their sole resort 80

That is of manifold varieties in accordance with the *profusion or sparceness* of heavy or of light syllables or with [an equal] mixture of them, and can be illustrated in Chronicles, etc 81

[For example—] 'Astamastakaparyastasamastārkāmsusamstarā I Pinastanasthitātāmrakamravastreva vāruṇī II (Clad in the drapery of all the beams of the Sun scattered on the summit of the Setting mountain, the Western direction [looks] like a dame with a beautiful reddish garment covering her expansive bosom) 82

In this way even in poetry the Easterners cultivate Floridity in expressions The others however prefer Floridity of expressions when it is charming and not confusing For example— 83

'Payodharataṭotsangalagnasamdhyātapāmśukā I Kasya kāmāturam cheto vāruṇī na karishyati II (With her garment in the form of the evening rays clinging to the sloping ridge of < the bosom in the form of > the clouds whose mind cannot < the damsel in the form of > the Western direction make love afflicted ?)' 84

Graceful is what is agreeable to the whole world because [being striking withal] it does not transcend ordinary possibilities It is met with in friendly inquiries and also in descriptions 85

[For example—] 'Those alone are verily houses which a great ascetic like you thus honours by the purifying dust of his feet 86

[Or—] 'O thou of faultless limbs, unto these thy breasts as they are expanding there is no room adequate between *thy two creeper-like hands* 87

[In these two examples] the matter is quite within the limits of possibility and is embellished by being expressed in a telling fashion It is considered graceful by every one who is content to keep within the normal run of things. 88

When a matter is sought to be described by an excessive superimposition, as transcending the ordinary, thereby it is the connoisseurs who are much pleased and not the others For example— 89

'Like a Sanctuary of Gods this our house from to day onwards is to be honoured in as much as its sin has been entirely washed off by the falling of the dust from your feet' 90

[Or—] 'Small has been the Aērial space created by the Creator, quite unmindful of this so extensive an expansion of your breasts that was to be!' 91

This has been styled 'exaggerated statement' it is made too much of by the Gaudas The mode earlier illustrated is the essence of the other style £2

When, keeping within the limits of mundane possibilities, the nature of a thing is neatly transferred to another thing/distinct from it |that is known as Transference For example— 93

'The night lotuses close in while the day lotuses open up Here by reason of the superimposition of the action of the eyes [upon the lotuses] words expressive [of that action] have been predicated [of the lotuses] 94

Spitting belching vomitting and such other words, only when appearing under a secondary sense are very pleasing, elsewhere they fall within the limits of vulgarity 95

[For example—] 'The lotuses having drunk the sparks of fire emitted by solar rays seem once again to vomit them through their mouths that eject reddish pollen. 96

This is agreeable disagreeable however is an expression like—'the young lady is spitting A simultaneous

superimposition of many qualities is [ likewise ] declared [ to constitute the same guna ] For example— 97

'The rows of clouds thundering, [ like moaning women enceiente, ] overpowered by the heavy weight of the fœtus <in the form of water> are here lying upon the lap of the <friend in the form of the> mountain table land' 98

Here, lying upon the lap of the friend, moaning, heaviness, fatigue—these manifold characteristics of the enceiente are exhibited [ by transference ] 99

This quality that is called Transference is indeed the all in-all of poetry , all poets whatsoever, without exception follow its guidance 100

Thus these two Styles are differentiated by a description of the nature of each [Subsidiary] divisions of them as existing in the individual poets it is not possible to describe 101

Great is the difference in the sweetness of sugar cane, of milk, and of molasses , and yet it is not possible to have it described even by the Goddess-of Learning 102

An inborn genius, learning quite free from defects, and no slight application these constitute the [ one ] cause of this excellence in poetry. 103

Even though there be not that extraordinary genius which depends upon the [ specific ] nature of the earlier latent impressions yet Speech, cutivated with study and effort, certainly grants her own rare favour 104

Therefore, verily, it behoves those seeking fame to put away sloth and persistently cultivate Speech For, even though the poetic power be meagre, yet people who have made the effort are able to hold their own in assemblies of the wise 105

Thus ends the First Chapter entitled Differences of Style of the Kāvyadarsa or Mirror of Poetry, the work of Ācharya Dandin

---

## PARICHCHHEDA II

The attributes that lend elegance to poetry they call Embellishments They are yet being formulated, who can [possibly] describe them in their entirety? 1

But the principle underlying the formulation has been indicated by earlier Teachers This our endeavour aims at giving the same once more in a revised form 2

Some Embellishments have been already described before [i 52, 55 61] while distinguishing the [two] Styles other Embellishments common [to both] will [now] be exhibited 3

Nature description (ii 8), Simile (ii 14) Metaphor (ii 66), Illuminator (ii 97) and Repetition (ii 116) Interdiction (ii 120) Corroboration (ii 169), Out-matching (ii 180) Cause searching (ii 199),

Inclusion [Inclusive Assertion] (ii 205) Transcending [Hyperbole] (ii 214) and Poetic Conception (ii 221), Cause (ii 23?), The Subtle (ii 260) The Slender (ii 265), Relative Order (ii 273) The Joyous (ii 275) The Impassioned (ii. 275, 281) The Vigorous (ii 275 294) Periphrasis (ii 295) Facilitation (ii 298) 5

The Exalted (ii 300) Concealment ii 304, Paronomasia (ii 310) Effectuation through Hinderance (ii 323) Equal-Pairing (ii 330), Contradiction (ii 333) Vicarious Praise (ii 340) Disguised Eulogy (ii 343), Illustration (ii 348), 6

Conjoint Description (ii 351) Barter (ii 351), Benediction (ii 357) Commixture (ii 359, and Sustained-Intuition (ii 364), These are the Embellishments of Language exhibited by ancient Sages 7

*Making bodily manifest the [real] nature of things in* varying situations the first of these Embellishments is called 'Nature-Description' or 'Class Portrayal' For example— 8

With their beaks reddish and curved their feathers green and tender, with their throats exhibiting the tricolour line here are these parrots with their sweet talk' 9

[Or—] 'With his throat thrilling with sweet cooing and his eyes rolling about this pigeon, full of lust, has covered up and is kissing his mate' 10

[Or—] 'Causing the hair on the body to stand on end, affording bliss unto the mind, and making the eyes close this is my Beloved s touch gaining upon me' 11

[Or, again—] 'Black at the throat and holding a skull in his hand the moon-crested and bull bannered [God Siva] with his softly reddish matted hair became visible' 12

Such is Nature description as referring [respectively] to a class, an action, a quality and an individual substance It is this very [description] that rules supreme in scientific treatises, and in poetry too the same is in requision. 13

When in some sort or other a likeness is experienced as springing up [between two things] that is called Simile It will now be exhibited in all its details 14

'The palm of your hands, O pretty maiden is red like a water lily'—This is Simile with [specified] Quality in as much as the common quality is directly exhibited here 15

'Thy face is like a red lotus, thy eyes like two blue lotuses'—This is Simile [direct] between Things seeing that the [common] quality is merely to be inferred 16

'Like your face this lotus has become blooming'—This is understood as Reversed Simile because the established order [of things] is here controverted 17

'The lotus is like thy face, thy face is like the lotus'— This one is Mutual Simile as it shows forth mutual excellence 18

'Thy face is to be likened to the lotus alone to nothing else whatsoever'—This in as much as it negatives semblance with another thing is Restrictive Simile 19

Lotus for its part imitates thy face if another there be of the same sort let it do likewise —This is Unrestricted Simile 20

A Cumulative Simile also their is of the following type—'not in splendour alone but in the action of delighting also thy face imitates the Moon'. 21

'In thee alone is thy face to be seen, while the Moon is seen in the sky: this much is the only difference, no other'—This is a Transcendent Simile 22

'Let not the Moon boast, thinking—in me alone is the splendour of her face, since it does exist even in the lotus' —This is Fancied Simile. 23

'If there were to be a kind of a lotus with upraised eye-brows and with eyes rolling in it, that might be admitted to wear the beauty of thy face'—This is called Hypothetical Simile. 24

'Fancying thy face, O slender-bodied one, to be the Moon, in my yearning for thy face, I am running even after the Moon!'—This is considered Simile of Illusion. 25

'Is it a lotus with bees rolling inside?—Is it thy face with tremulous eyes?—thus does my heart waver'—This one is Simile with a Doubt. 26

'In a lotus that the Moon can overpower, there cannot be a splendour that puts the Moon to shame: hence this is only thy face'—This is Determinative Simile. 27

'Out-rivaling, the cold-rayed [Moon], full of splendour and possessing a fragrant breath, thy face is like a lotus <that hates the Moon, that smells fragrantly, and wherein the Goddess-of-Wealth resides>'—This is declared to be Paronomastic Simile. 28

Because it can be expressed in words having identical forms a Simile is called a Simile of Agreement; for example—'This row of gardens looking beautiful by reason of forests of Sāla trees is like a girl < beaming with her face and flowing hair>.' 29

'A lotus is full of pollen [or dust]; the Moon is subject to waning [or consumption]. Thy face, though similar to them, towers proudly above them'—This is declared to be Condemnatory Simile 30

'Lotus is the place-of origin of even God Brahmadeva, the Moon is held by God Sambhu upon his head, and these [two] are like thy face'—This is called Laudatory Simile 31

'My mind desires to declare that thy face is like the Moon that may be a merit or a blemish'—This is known as Simile with Suppressed Judgment 32

'The hundred-petaled [lotus] the autumnal Moon and thy face this triad is mutually opposed'—This is considered Simile of Opposition 33

'There does *not at all exist any power in the cold* < dull > and spotted Moon to roar against (or rival) the face'—This is no other than Inhibitive Simile 34

Thy face is marked with the eyes of deer the Moon is marked by the deer itself, and yet the Moon is merely thy equal and does not surpass thee'—This is Cajoling Simile 35

This is not a lotus but the face itself, these are not two bees but the eyes —This, because the point of similarity is quite evident, is no other than a Simile based upon a Statement of Fact 36

'Having transcended the equality with the Moon and with the lotus, thy face has become like unto itself alone —This is [called] an Absolute Simile 37

'Thy face shines like the essence of the splendour of all lotuses as if gathered together in a place'—This is known as Abnormal Simile 38

'That harsh speech should issue from this mouth is as though poison should issue from the Moon or fire from sandal —This is Simile of Impossibility 39

Thy touch is cool like sandal water, like Moon beam, like Moon stone, and such other things'—This, as bringing out the excess [of the quality] is called Multiplex Simile 40

'As if chiselled out of the lunar orb, as if extracted from lotus interior is, O slender bodied one, thy face — This is Modificatory Simile 41

